## दूर्वाक्षतदानमन्त्रः

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु फलवंत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम् । ॐ मन्त्रार्थाः सिद्धयः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।

## यज्ञोपवीतधारणमन्त्रः

वाजसनेयिनां–ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । छन्दोगानां–ॐ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ।

जीर्णयज्ञोपवीतत्यागमन्त्रः–एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ।

## ग्रहाणां यजुर्वेदीयशान्तिमन्त्राः

सूर्यस्य–ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । चन्द्रस्य–ॐ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्येष्ठयाय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा । कुजस्य–ॐ अग्निर्मूर्द्धा दिवः कुकुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वति । बुधस्य–ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते संसृजेथामयञ्च । अस्मिन्त्सधस्ते अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत । गुरोः–ॐ बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋत प्रजात तदस्मासु द्रविणन्धेहि चित्रम् । भृगोः–ॐ अन्नात्परिश्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु । शनेः–ॐ शन्नो देवीरभीष्टय आपो भवन्तु पीतये संयोरभिस्रवन्तु नः । राहोः–ॐ कयानश्चित्र आभुव दूती सदावृधः सखा कया शचिष्ठया वृता । केतोः–ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे समुषद्भिरजायथाः ।

## ग्रहाणां सामवेदीयशान्तिमन्त्राः

सूर्यस्य–ॐ उदुत्यञ्जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यम् । चन्द्रस्य–ॐ सन्ते पयांसि समयन्तुवाजाः संवृष्ण्यान्यभिमातिषाहः आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानिधिष्व । कुजस्य–ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वति । बुधस्य–ॐ अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य आदाशुषे जातवेदो वहात्वमद्या देवो उषर्बुधः । गुरोः–ॐ बृहस्पते परिदीयारथेन रक्षोहामित्रां अपबाधमानः प्रभञ्जत्सेनाः प्रमृणो युधाजयन्नस्माकं मेध्यविता रथानाम् । शुक्रस्य–ॐ शुक्रन्ते अन्यद्यजन्ते अन्यद्विषुरूपे अहनी द्यौरिवासि विश्वाहि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु । शनेः–ॐ शन्नो देवीरभीष्टये शन्नो भवन्तु पीतये संयोरभिस्रवन्तु नः । राहोः–ॐ कयानश्चित्र आभुवदूती सदा वृधः सखा कया शचिष्ठया वृता । केतोः–ॐकेतुं कृण्वन्न केतवे पेशोमर्या अपेशसे सुमषद्भिरजायथाः ।

## विशिष्टपर्वसूची

| | | |
|---|---|---|
| मौनापंचमी-२४ जुलाई | कोजागरा- १५अक्टुबर | मकरसंक्रान्ति-१४ जनवरी |
| मधुश्रावणी-६ अगस्त | लक्ष्मीपूजा- १५ अक्टुबर | नरकनिवारण १४-२६ जनवरी |
| नागपंचमी-८ अगस्त | धन्वन्तरिजयन्ती-२८अक्टुबर | गणतन्त्रदिवस-२६ जनवरी |
| स्वतन्त्रतादिवस-१५ अगस्त | हनुमज्जयन्ती-२९अक्टुबर | सरस्वतीपूजा-१ फरवरी |
| संस्कृतदिवस-१८अगस्त | दीपावली-३०अक्टुबर | अचलासप्तमी-३ फरवरी |
| रक्षाबन्धन-१८अगस्त | लक्ष्मीपूजा- ३० अक्टुबर | माघीपूर्णिमा-११ फरवरी |
| कृष्णाष्टमी-२५अगस्त | कालीपूजा- ३० अक्टुबर | महाशिवरात्रि-२५ फरवरी |
| कुशोत्पाटन-१ सितम्बर | अन्नकूट-१ नवम्बर | होलिकादाह-१२ मार्च |
| सोमवती३०-१सितम्बर | गोक्रीडा-१नवम्बर | होली-१३ मार्च |
| हरितालिका-५सितम्बर | भ्रातृद्वितीया-२नवम्बर | सप्ताडोरकबन्धन-१३ मार्च |
| चौठचन्द्र-५सितम्बर | चित्रगुप्तपूजा-२नवम्बर | वारुणीयोग-२६ मार्च |
| अनन्तपूजा-१५सितम्बर | प्रतिहारषष्ठी-६ नवम्बर | रामनवमी-५ अप्रील |
| अगस्त्यार्घदान-१६सितम्बर | अक्षयनवमी-९नवम्बर | महावीरजयन्ती-९ अप्रील |
| चन्द्रग्रहण-१६सितम्बर | देवोत्थान११-११नवम्बर | हरिद्वारकुंभ-१४अप्रील |
| पितृपक्षारंभ-१७सितम्बर | विद्यापतिपर्व-१२नवम्बर | नववर्षारंभ-१४ अप्रील |
| जीमूतवाहनव्रत-२३ सितम्बर | कार्त्तिकीपूर्णिमा-१४नवम्बर | मेषसंक्रान्ति-१४ अप्रील |
| मातृनवमी-२५सितम्बर | सामापूजा-१४नवम्बर | जूडिशीतल-१५ अप्रील |
| गजच्छाया-२८सितम्बर | हरिहरक्षेत्रस्नान-१४नवम्बर | अक्षयतृतीया-२९ अप्रील |
| गजच्छाया-२९सितम्बर | कार्त्तिकेयपूजा-१४नवम्बर | जानकीनवमी-५ मई |
| पितृपक्षान्त-१ अक्टुबर | वीडपंचमी-१९ नवम्बर | नरसिंह१४- ९ मई |
| कलशस्थापन-२ अक्टुबर | नवान्नपार्वण-४दिसम्बर | रविव्रतान्त- १० मई |
| विल्वाभिमन्त्रण-७ अक्टुबर | विवाहपंचमी-४दिसम्बर | बुद्धजयन्ती- ११ मई |
| पत्रिकाप्रवेश-८ अक्टुबर | रविव्रतारंभ-७दिसम्बर | वटसावित्री-२५ मई |
| निशापूजा-९अक्टुबर | गीताजयन्ती-१० दिसम्बर | सोमव्रती३०-२५ मई |
| महाष्टमीव्रत-९अक्टुबर | हरिहरक्षेत्रस्नान-१४दिसम्बर | गंगादशहरा-४ जून |
| महानवमी-१०अक्टुबर | सोमवती३०-२९दिसम्बर | रथयात्रा-२६ जून |
| विजयादशमी-११अक्टुबर | कौशिकीस्नान-१२ जनवरी | हरिशयन११-५ जुलाई |
| | | गुरुपूर्णिमा-९ जुलाई |

* सौराठससौलासभा *

दि २५।६।९८ ई. तः ३।७।९८ ई. यावत्

* उपनयनदिन *

अप्रील-१,६,७,३०
मई-१७,२८
जून-१५,२६

* विवाहदिन *

नवम्बर-२१,२४,२६,२७,३०
दिसम्बर-१,४,५,१०
जनवरी-१८,१९,२१,२२,२३,२५
अप्रील-१७,१९,२०,२३,२४,२६,२९,३०
मई-१७,८,१०,१३,१७,१८,२१,२२,२५,२७,३१
जून-१,३,४,५,७,१०,११,१८,१९,२२,२८,२९
जुलाई-१,३

* ग्रहणविवरणम् *

भाद्र-पूर्णिमायां कुजे खग्रासचन्द्रग्रहणस्पर्शः प्रामाणिकसमयानुसारं रात्रौ घं. १० मि. ४१ उपरि, मोक्षश्च घं. १ मि. ५९ उपरि रात्रौ । स्थानीय समयानुसारं मिथिलायां स्पर्शो रात्रौ घं. १० मि. २२ उपरि मोक्षश्च घं. २ मि. १८ उपरि रात्रौ । अत्र स्नानदानजप-पाठ-होमसुरार्चनादावनन्त-फलम् ।

* ग्रहणफलम् *

| राशयः | | फलम् |
|---|---|---|
| मेषः | - | लाभः |
| वृषः | - | सुखम् |
| मिथुनं | - | मानहानिः |
| कर्कः | - | कष्टम् |
| सिंहः | - | स्त्रीपीडा |
| कन्या | - | सुखम् |
| तुला | - | चिन्ता |
| वृश्चिकः | - | व्यथा |
| धनुः | - | धनम् |
| मकरः | - | क्षतिः |
| कुंभः | - | घातः |
| मीनः | - | हानिः |

विशेषः– पूर्वभाद्रनक्षत्रवतां कष्टकरम् । अनिष्टसूचकग्रहणं न द्रष्टव्यम् ।

* ग्रहणकृत्यम् *

सूर्यग्रहः सूर्यवारे सोमे सोमग्रहस्तथा ।
चूडामणिरयं योगस्तत्रानन्तफलं भवेत् ॥
सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥
ग्रस्यमाने भवेत्स्नानं मध्ये होमसुरार्चनम ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं समाचरेत् ॥
सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गंगासमं तोयं ग्रहणेनात्र संशयः ॥
चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥
गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने ग्रहणे नात्र संशयः ॥
संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः ।
सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च सर्वदा ॥

## कुलपतेः "शिवसङ्कल्पः"

कामेश्वराख्य–बुधभूपतितल्लजेन
गीर्वाणवाग्विभववर्धनतत्परेण ।
संस्थापिते विविधशास्त्रनदीष्णविश्व-
विद्यालये बहुतिथात् समयात् प्रवृत्तम् ।
पञ्चाङ्गमेतदिह वैदिकतन्त्रकर्म-
वीथीप्रकाशनचणं मिथिलाजनेड्यम् ।
श्रीरामचन्द्रविदुषा किल झोपनाम्ना
सार्धं स्वकैरनुचरैर्ग्रथितं चकास्तात् ।

जानकीनवमी
शकाब्दः १९१९

**प्रो. वि. वेङ्कटाचलः**
कुलपतिः

अथैतन्नूतनतिथिपत्रे मैथिलनिबन्धसम्मतसमयशुद्धिव्रत-पर्वप्रभृतिविषयान् संरक्ष्य समयशुद्धौ विहितमुहूर्त्तानुसारं विवाहोपनयनदेवादि-प्रतिष्ठाद्विरागमनवास्तुगृहप्रवेशप्रभृति – दिनानि सन्निवेशितानि । तानि चाखिलभारतीय – मैथिलमहासभासमायोजित – ०६।४।९७ दिवसीय-पण्डितपरिषदाऽनुमोदितानि ।

अपि च पञ्चाङ्गेऽस्मिन् वैशिष्ट्यमाधातुं स्वकीयाः सम्मतीः संस्कारप्रकारांश्च सहर्षं प्रेषयन्तु सुधीवराः ।

अन्ते चात्र कण्टकजन्यदोषाद् बुद्धिभ्रमदोषाद्वा या अशुद्धयस्ताः पूर्वापरसन्दर्भमवलम्ब्य स्वयमेव संशोध्य व्यवहरन्तु गुणैकपक्षपातिनो विद्वांस इति ।

परशुरामजयन्ती
दि. ९।५।९७

निवेदयति
पं. श्रीरामचन्द्र झा